# वास्तुसूत्र उपनिषद्

## प्रथमप्रपाठकस्य सूत्राणि

वास्तोष्पतिर्ज्ञेय इति १ षट्शिल्पाङ्गप्रयोगेण प्रजनयन्ति रूपाणि २ यूपमिदं ज्योतिः ३ वृत्तज्ञानं रेखाज्ञानं च यो जानाति स स्थापकः ४ शिल्पात् प्रतिमा जायन्ते ५ स प्रवहणः शिल्प-सूत्राध्यायं स्थापकविद्यां चावदत् ६ शरीरमूर्तिरहिते मन आवेश्य विशेषेण विकल्पिदोषयुक्तं भवति इति ७ वास्तुषडङ्गमिति श्रेष्ठम् ८ षड्धा शैलं ज्ञेयम् ९ शैलादङ्गरागज्ञानं प्रसरति १०

## द्वितीयप्रपाठकस्य सूत्राणि

निर्दिष्टार्थकप्रतिमा ग्राह्या १ तत्पातनं प्रथमा क्रिया २ तन्मर्दनं द्वितीया क्रिया ३ विलमिति मर्मज्ञेयम् ४ न कृत्यरूपार्थं रेखाकरणं कर्तव्यम् ५ आदौ वृत्तम् ६ एकैकस्य संयोगे एकीभवति ७ रेखान्वये सर्वाङ्गाणि न्यासय ८ तेजांसि सरलरेखाणि ९ नाभौ रूपकर्म प्रारभ्यते १० प्राजापत्यरीत्या वृत्तं हि तेजस्तदाऽपां भासे चतुरस्त्रम् ११ कर्णद्वयं मरुद्भावेन आचरन्ति १२ धरेव कर्णिकक्षेत्रमाकर्षयन्ति स्थापकाः १३ तत्र मध्ये लब्धबिन्दू रसायाः प्राणः १४ त्रिहुताग्निः स्मर्यतेऽपि च लोके १५ निम्नगास्त्रिहुता आप इति १६ षट्कोणको हि आकर्षणीविद्यावि-शेषः १७ यथा रूपे तथा यूपेऽनुच्छेदान्ता ग्राह्याः १८ खनन-प्रकारो ध्येयः १९ सूत्रायने रेखाः सुभगा भवन्ति २० उत्थितरेखा अग्निरूपाः पार्श्वगा अब्रूपाः तिर्यग्रेखा मरुतरूपा इति २१ रूप-सौभाग्याद्ध्यानभावो जायते २२ अग्निरेखायामुत्तुङ्गरूपाणि जायन्ते २३ अब्रेखायामुत्सुकरूपाणि जायन्ते २४ मारुतरेखायां तैजसरूपाणि २५ रेखाज्ञानं सर्वमिति ज्ञेयम् २६

## तृतीयप्रपाठकस्य सूत्राणि

रूपस्य भावो मुख्यः १ भावानुसारतो रेखाविधानमिति ज्ञेयम् २ तेषां बहुधा कृत्यं श्रेयः ३ न्यासार्थं कालबोधो ध्येय इति ४ खनित्राणि अभिमन्त्रयेत् ५ खनित्रपञ्चकं श्रेष्ठम् ६ रूपप्रकर्षार्थं रूपाङ्गं स्निग्धमिति ७ शिल्पकाराः प्रलेपयन्ति द्रावकरसम् ८ एषां हेतिविद्या श्रेष्ठा ९ रक्षार्थं पर्णमणिः परिधेयः १० भेदनाद-ङ्गसौभगं प्रभवति ११ रेखानुपातेनाङ्गानि निधेयानीति श्रेष्ठकृत्यम् १२ गाथानुप्रासे लक्षणं व्यक्तं भवति १३ ध्यानप्रयोगे रूपसौष्ठवं स्पष्टं भवति १४ यथा प्रकृतिस्तथा रूपलक्षणम् १५ अङ्गाना-मर्धाकलं सुषमं ध्येयम् १६ हर्सावधि उभयदिशि चोर्ध्वे वर्धयेत् १७ रक्षाविधानेन विघ्नघातयः १८ रेखाक्रमेण भेदनं चतुर्धा ज्ञेयम् १९ नेम्योत्तरे रूपाङ्गं न वर्धयेत् २० खनित्रचालनविधिर्ध्येयवि-शेषः २१

## चतुर्थप्रपाठकस्य सूत्राणि

प्रतीतात्प्रतीकः १ रूपादङ्गानि सञ्जायन्ते २ द्विधातो ब्रह्म रूप-वद्भवति ३ तत्त्वज्ञानेन कोष्ठका मुख्याः ४ वर्गीकरणं मुख्य-कृत्यम् ५ कोष्ठकान्तराले रूपस्यावयवो ध्येयः ६ परिमिताङ्ग-हाराद्भावलक्षणानि जायन्ते ७ कोष्ठके व्यतिक्रान्ते रूपमविद्यं भवति ८ शुल्बयज्ञस्य साधनं शिल्परूपस्य साधनमिति ९ शिल्पकाराणां रूपशैले रूपशालादि ध्येयम् १० यूपाद्रूपं रूपाद्यूप इति स्वभावः ११ यूपस्य मानं ध्येयम् १२ षड्भागस्य प्रयोगो ध्येयः १३ पुरुषस्य तद्रूपेऽङ्गस्तम्भाश्चत्वारो ऽष्टाङ्गक्रमेणोपजायन्ते १४ पालाशदण्डरज्जुसंयोगे रेखामानय १५ निम्नादूर्ध्वावधि सदारेखादीनाचर १६ पुरुषस्तम्भ इव स्तम्भो वै यज्ञस्य रूपम् १७ यथास्तम्भस्य यूपस्य दशाङ्गं तथा पुरुषस्य दशयज्ञप्रज्ञाश्च १८

स्थापकाचार्याः स्तम्भाद्रूपं बोधयन्ति १९ स्तम्भः कामकामिनस्त्रि-
धामानयन्ति २० दैवयज्ञार्थं यूपः २१ तदा पितृमेधेन वृषस्तम्भं
पशुमेधार्थं मिथुनस्तम्भं कामचारा होमे रोपयन्ति २२ तद्बोधे
मानुषा रूपज्ञा भवन्ति २३ पुरुषस्य रूपाकले कोष्ठकस्याधो
भावरूपं प्रसरति २४ दशाङ्गयूपे रूपे इति तस्य भावः समानः
२५ ब्रह्मकीलाधारः ब्रह्मकीलेन सह क्षेत्रं विभाजय २६ अङ्गादङ्गं
सञ्जायते २७ रेखासंयोगे तत्क्षेत्रेऽङ्गानि सौभगानि भवन्ति २८
क्षेत्रनेमिं रोधयेदिति रेखचत्वरे च २९

## पञ्चमप्रपाठकस्य सूत्राणि

भावस्यारोपणं रूपकर्माणि विधेयम् १ भावस्याऽधारो रसः २
मनसि वृत्तिर्बहुधा प्रजायते तदा भिन्नभिन्नरसाद्रूपं नैकं भवति ३
नवधा रसः ४ प्रथमरसः शृङ्गारः ५ शृङ्गाररूपार्थमब्रेखा ग्राह्याः
६ स हासो द्वितीयरसः ७ मुखलक्षणाद्रसं जानन्ति सर्वे ईक्षणेन
८ स तृतीयः करुणरसभाव इति ९ रौद्रः शिल्पकारेषु चतुर्थो रसः
१० तिर्यग्रेखायां भावः प्रकटो भवतीति विशेषः ११ स वीरभावः
पञ्चमः १२ वैरभावे उत्कटे भयङ्करो भवति स विलक्षणः षष्ठरसः
१३ तस्याङ्गमारुतरेखायामिति स सप्तमः १४ शान्तभावः सोऽष्टमो
रसः १५ भावानुगतरूपाणि चतुर्धा मुख्यानि १६ लोके भाव-
बोधस्य हेतुर्मनः १७ मनुष्याणां वृत्तिर्मुख्येति १८ सङ्कल्पाद्वि-
कल्प इति विशेषः १९ एष भुवनकोषो देहानुभूत्या क्रमः २०
अरूपाद् रूपं तस्य फलम् २१ दिशानुसृते दिशापालानुपासन्ते
२२ एवं दैवभेदान् मार्गभेदा जायन्ते २३

## षष्ठप्रपाठकस्य सूत्राणि

न्यासधारणा श्रेष्ठा १ वृत्त्या दैवचिन्तने भेदः सञ्जायते २

लत्तणप्रकाशार्थं शिल्पविद्या ३ न्यासोऽलङ्कारमुद्रायुधबा-
ध्रकत्तवाहनोपदेवारिस्तुवकक्रमेण रूपनवाङ्गविशेषो ध्येयः ४
तिस्रः रेखाः श्रेष्ठाः ५ रूपत्तेत्रे कोष्ठकालिर्मुख्या ६ षोड-
शकोष्ठकमध्ये रूपाणि प्रभवन्ति तद्रूपार्थं श्रेष्ठम् ७ विलमिति मर्म
ब्रह्मेव निधेयम् ८ षोडशकोष्ठकप्रमाणविभागस्तु ब्रह्मदैवजैवो-
पदैवयाजकक्रमेण पञ्चधाध्येयः ९ रूपाङ्गं चतुर्धेति विशेषः १०
बिन्दुर्ब्रह्मेव ब्रह्मध्रुवम् ११ ब्रह्म सत्यादौ १२ ब्रह्मबिन्द्ववलम्बनेन
रूपाङ्गाणि सौभगानि भवन्ति १३ अलङ्करणं दैवभूषणमिति १४
प्रमोदाद्रतिः प्रसरति १५ करमुद्रा रूपस्य भावं ज्ञापयति १६
बाध्रं बलं ज्ञापयति रूपे १७ आसनं षड्धा ज्ञेयम् १८ गुणानुसृतं
रूपत्रयम् १९ वाहनं रूपस्य प्रकृतिज्ञापकविशेषः २० उपदैवतं
प्रतिरूपमिति २१ उपदैवताद्रूपज्ञानं प्रसरति २२ अरिसन्धा
ध्येया २३ रूपधाराया वृत्तिरिति श्रेष्ठा २४ स्तोतृणां रूपे सुभग-
विशेषः २५ प्रज्ञार्थमेतद् वास्तूपाख्यानम् २६

Reference:
Boner, Alice; Śarma, Sadāśiva Rath; and Baumer, Bettina, *Vāstusūtra Upaniṣad: The Essence of Form in Sacred Art: Sanskrit Text, English Translation and Notes,* (Delhi: Motilal Banarsidass, 1986).